तत्रौद्वाहिकसम्बन्धादपरो बलवत्तरः ॥ ६ ॥
दायेतूर्द्ध्वतनाज्ज्यायान् सम्बन्धोऽधस्तनः प्रिये ! ।
अध-ऊर्द्ध्वक्रमादत्र पुमान् मुख्यतरः स्मृतः ॥ ७ ॥
तत्रापि सन्निकर्षेण सम्बन्धो दायमर्हति ।
अनेन विधिना धीरा विभजेयुः क्रमाद्धनम् ॥ ८ ॥
मृतस्य पुत्रे पौत्रे च कन्यासु पितरि स्थिते ।
भार्य्यायामपि दायार्हः पुत्र एव न चापरः ॥ ९ ॥

सम्बन्धो मद्द्वाद्वेधस्तत्र वैवाहिकसम्बन्धतो जननसम्बन्धस्य प्राबल्यं प्रतिपादयति सम्बन्ध इत्यादिना । विवाहात्तथा जन्मनः उत्पत्तेः सम्बन्धो द्विविधो द्विप्रकारको ज्ञेयो बोद्धव्यः, तत्र तयोः सम्बन्धयो-र्वैवाहिकसम्बन्धादपरो जननसम्बन्धो बलवत्तरो ज्ञेयः ॥ ६ ॥

दायहरणे ऊर्द्ध्वतनसम्बन्धतोऽधोभवस्यैव सम्बन्धस्य श्रेष्ठत्वमध-ऊर्द्ध्वक्रमतो योषिद्भ्यः पुरुषस्यैव प्रधानतरत्वं चाह दाये त्वित्यादिना । हे प्रिये ! दाये तु धने तूर्द्ध्वतनादूर्द्ध्वभवात् सम्बन्धादधस्तनोऽधोभवः सम्बन्धो ज्यायान् श्रेष्ठः स्मृतः तथञ्चैताभिवादनादाधस्तनात् सम्बन्धा-दूर्द्ध्वतनस्यैव सम्बन्धस्य ज्यायस्त्वमिति ध्वनितम् । अत्र दायहरणेऽध-ऊर्द्ध्वक्रमात् स्त्रीतः पुमान् पुरुषो मुख्यतरः प्रधानतरः स्मृतः ॥ ७ ॥

सम्बन्धस्थानापन्नयोर्मध्ये कतरस्य दायार्हत्वं स्यात् तत्राह तत्रा-पीति । तत्रापि मुख्यतरेषु पुंस्वपि सन्निकर्षेण सान्निध्येन सम्बन्धो दायमर्हति धनार्हो भवति अनेन पूर्व्वोक्तेन विधिना धीरा मनीषिणो धनं क्रमाद्विभजेयुर्व्वण्टयेयुः ॥ ८ ॥

ननु प्राप्तपञ्चत्वस्य पुंसो विद्यमानानां पत्नीकन्यानां ताततनय-पौत्राणाञ्च मध्ये कतमस्य तद्धनग्राहकत्वमत आह मृतस्येत्यादिना । मृतस्य मानवस्य पुत्रे पौत्रे पितरि च स्थिते कन्यासु आत्मजासु च स्थितासु भार्य्यायां पत्न्यामपि स्थितायां सन्निकृष्टत्वात् पुंस्त्वेन मुख्यत-रत्वादधोभवत्वेन ज्यायस्त्वाच्च पुत्र एव दायार्हः स्यान्न चापरः

बहवस्तनया यत्र सर्व्वे तत्र समांशिनः ।
ज्येष्ठे राज्याधिकारित्वं तत्तु वंशानुसारतः ॥ १० ॥
ऋणं यत् पैतृकं तच्च शोधयेत् पैतृकैर्धनैः ।
तस्मिन् स्थिते विभागार्हं न भवेत् पैतृकं वसु ॥ ११ ॥
विभज्य यदि गृह्णीयुर्विभवं पैतृकं नराः ।
तेभ्यस्तद्धनमाहृत्य पितॄणां दापयेन्नृपः ॥ १२ ॥

भिन्नः पौत्त्रादिर्दायार्हः पौत्त्रस्य पुत्त्रतो विप्रकृष्टत्वात् भार्य्यायाः कन्यानां च स्त्रीत्वेनाप्रधानत्वात् पितृश्चोर्द्ध्वभवत्वेनाल्पायस्त्वाद्दायार्हत्वं नेत्यर्थः ॥ ९ ॥

ननु बहुपुत्त्रस्य प्रमीतस्य पृथ्वीपतेः स्थावरे स्थावरेतरद्रव्येषु सर्व्वेषामात्मजानां समांशहारित्वं न्यूनाधिकांशहारित्वं वेत्यत आह बहव इत्यादिना । राज्ञो यत्र स्थावरे जङ्गमे वापि द्रव्ये बहवः तनयाः पुत्त्रा भागार्हास्तत्र सर्व्वे समांशिनस्तुल्यभागिनः स्युर्न तु न्यूनाधिकांशिन इत्यर्थः । ननु महीपतेर्ज्येष्ठ एवात्मजे प्रायशो राज्याधिकारित्वं श्रूयते दृश्यते च तत् कथमुच्यते सर्व्वे तत्र समांशिन इत्यत आह ज्येष्ठे राज्ञः पुत्त्रे यद्राज्याधिकारित्वं तत्तु वंशानुसारतो ज्ञेयम् । वंशे यदि ज्येष्ठ एव राजपुत्त्रो राज्यं लभमानो भवेत्तदा तस्यैव राज्याधिकारित्वम् । अन्येषां ग्रासाच्छादनमात्रम्, अन्यथा तु पृथ्व्यादिकं सकलं द्रविणं विभज्य सर्व्वे गृह्णीयुरिति भावः ॥ १० ॥

पैतृकमृणं दत्त्वाऽवशिष्टं पितृद्रव्यं भ्रातृभिर्विभक्तव्यमित्याह ऋणमित्यादिना । पैतृकं पितृसम्बन्धि यदृणं तत् पैतृकैः पितृसम्बन्धिभिर्धनैः शोधयेत् तस्मिन्नृणे स्थिते सति पैतृकं वसु धनं विभागार्हं विभजनयोग्यं न भवेत् ॥ ११ ॥

पैतृकस्य भागानर्हत्वेऽपि विभज्य गृहीततातद्रव्येभ्यो नराधिपः ऋणदेभ्यो दापयेदित्याह विभज्येत्यादिना । पैतृकं विभवं धनं विभज्य

यथा स्वकृतपापेन निरयं यान्ति मानवाः ।
ऋणेनापि तथा बद्धः स्वयमेव न चापरः ॥ १३ ॥
साधारणं धनं यच्च स्थावरं स्थावरेतरम् ।
अंशिनः प्राप्तुमर्हन्ति स्वं स्वमंशं विभागतः ॥ १४ ॥
अंशिनां सम्मतावेव विभागः परिसिध्यति ।
तेषामसम्मतौ राजा समदृष्ट्यांशमाचरेत् ॥ १५ ॥
स्थावरस्य चरस्यापि विभागानर्हवस्तुनः ।
मूल्यं वा तदुपसत्त्वमंशिनां विभजेन्नृपः ॥ १६ ॥

रा यदि गृह्णीयुस्तदा तेभ्यो नरेभ्यस्तत् पैतृकं धनमाहृत्य गृहीत्वा नृपो राजा पितॄणां तातसम्बन्ध्यृणं तेऽर्पयेत् ॥ १२ ॥

ऋणानयने ऋणग्रहीतुरेव सदृष्टान्तं तद्दोषभागित्वमाह यथेत्यादिना । यथा स्वकृतपापेन मानवा नरा निरयं नरकं यान्ति तथा ऋणेनापि स्वयमेव बद्धो भवति न चापरस्तदन्यः कश्चन बद्धो भवेत् ॥ १३ ॥

सामान्ये स्थावरे जङ्गमे च द्रव्ये सर्वेषामेव दायादानां तुल्यांशग्राहकत्वमित्याह साधारणमित्यादिना । स्थावरं स्थावरेतरं जङ्गमं च यत् साधारणं सामान्यं तत्र विभागतः सर्वेऽशिनः स्वं स्वमंशं प्राप्तुं लब्धुमर्हन्ति योग्या भवन्ति ॥ १४ ॥

सर्वेषामंशिकानां मिथः सम्मतौ सत्यामेव विभागस्य संसिद्धिः स्यादित्याह अंशिनामित्याद्यर्द्धेन । अंशिनां भागग्राहकाणां सम्मतावेव सत्यां विभागः परिसिध्यति निष्पद्यते न त्वन्यथा । ननु पैतृकद्रव्यविभागे सर्वेषां दायादानां सम्मतेरभावे कथं विभागो भवेत्तत्राह तेषामित्यादिना । तेषामंशिनामसम्मतौ सत्यां राजा समदृष्ट्या तुल्यदृष्ट्या अंशं भागमाचरेत् कुर्यात् ॥ १५ ॥

ननु विभागायोग्यस्य स्थावरादेर्वस्तुनः कथं विभागः स्यादत आह स्थावरस्येत्यादिना । स्थावरस्य चरस्य जङ्गमस्यापि विभागान-

विभक्तेऽपि धने यस्तु स्वीयांशं प्रतिपादयेत् ।
पुनर्विभज्य तद्द्रव्यमप्राप्तांशाय दापयेत् ॥ १७ ॥
कृते विभागे द्रव्याणामंशिनां सम्मतौ शिवे ।
पुनर्विवादयंस्तत्र शास्यो भवति भूभृतः ॥ १८ ॥
स्थिते प्रेतस्य पौत्रे च भार्य्यायाञ्च पितर्य्यपि ।
पौत्र एव धनार्हः स्यादधस्ताज्जन्मगौरवात् ॥ १९ ॥

ईदृशस्तुनो विभाजनायोग्यस्य पदार्थस्य मूल्यमथवा तदुपस्वत्वं तदतिरिक्तं तत्र एवोपजातं द्रव्यं नृपो राजा अंशिनां दायादानां विभजेत् तेभ्यो दापयित्वा विभक्तं कुर्य्यात् । अंशिनामिति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी शेषे इति षष्ठी ॥ १६ ॥

अथांशिभिर्विभज्य गृहीतेष्वपि द्रव्येषु स्वकीयं भागं साक्षिभिर्न्यस्याप्य आपयते मानवाय राजा पुनस्तानि द्रव्याणि विभज्य तैर्द्दापयेदित्याह विभक्तेऽपीत्यादिना । विभक्तेऽपि वण्टितेऽपि धने यस्तु मनुष्यः स्वीयांशमात्मीयं भागं प्रतिपादयेत् प्रख्याप्य साक्षिभिर्वोधयेत् तस्मै अप्राप्तांशाय मनुष्याय पुनस्तत् द्रव्यं विभज्य नृपो दायादैर्द्दापयेत् ॥ १७ ॥

सर्वेषां दायानां सम्मतौ सत्यां द्रव्यविभागे जाते पुनस्तत्र विवादं कुर्वन्नरो महीपालेन शासनीयो भवेदित्याह कृत इत्यादिना । हे शिवे ! अंशिनां सम्मतौ सत्यां द्रव्याणां विभागे कृते सति पुनस्तत्र द्रव्यविभागे विवादयन् विवादं कुर्वन्नरो भूभृतो राज्ञः शास्यः शासनीयो भवति ॥ १८ ॥

ननु प्रमीतस्य मानवस्य विद्यमानानां तातभार्य्यापौत्राणां मध्ये कस्य तद्धनभागित्वमत आह स्थिते इत्यादिना । प्रेतस्य मृतस्य मनुष्यस्य पौत्रे पितरि चापि स्थिते भार्य्यायां च स्थितायामधस्ताज्जन्म येषां तेषां गौरवाद्गुरुत्वाद्धेतोः पौत्र एव धनार्हो धनभोग्यः स्यात् ॥ १९ ॥

तत्रौद्वाहिकसम्बन्धात् परो बलवत्तरः ॥ ६ ॥
दायेतूर्ध्वतमाज्ज्यायान् सम्बन्धोऽधस्तनः शिवे ! ।
अध-ऊर्ध्वक्रमादेव पुमान् मुख्यतरः स्मृतः ॥ ७ ॥
तत्रापि सन्निकर्षेण सम्बन्धी दायमर्हति ।
अनेन विधिना धीरा विभजेयुः क्रमाद्धनम् ॥ ८ ॥
मृतस्य पुत्रे पौत्रे च कन्यासु पितरि स्थिते ।
भार्य्यायामपि दायार्हः पुत्र एव न चापरः ॥ ९ ॥

भगवान् महादेवस्तत्र वैवाहिकसम्बन्धतो जननसम्बन्धस्य प्राबल्यं प्रतिपादयति सम्बन्ध इत्यादिना । विवाहात्तथा जन्मनः उत्पत्तेः सम्बन्धो द्विविधो द्विप्रकारको ज्ञेयो बोद्धव्यः, तत्र तयोः सम्बन्धयो-रौद्वाहिकसम्बन्धात्परो जननसम्बन्धो बलवत्तरो ज्ञेयः ॥ ६ ॥

दायहरणे ऊर्द्ध्वतनसम्बन्धतोऽधोभवस्यैव सम्बन्धस्य ज्येष्ठत्वमध-ऊर्द्ध्वक्रमतो योषिद्भ्यः पुरुषस्यैव प्रधानतरत्वं चाह दाये त्वित्यादिना । हे शिवे ! दाये तु धने ऊर्द्ध्वतनादूर्द्ध्वभवात् सम्बन्धादधस्तनोऽधोभवः सम्बन्धो ज्यायान् श्रेष्ठः स्मृतः तुशब्देनाभिवादनादावधस्तनात् सम्बन्धा-दूर्द्ध्वतनस्यैव सम्बन्धस्य ज्यायस्त्वमिति ध्वनितम् । अत्र दायहरणेऽध-ऊर्द्ध्वक्रमात् स्त्रीतः पुमान् पुरुषो मुख्यतरः प्रधानतरः स्मृतः ॥ ७ ॥

सम्बन्धानामनयोर्म्मध्ये कतरस्य दायार्हत्वं स्यात् तत्राह तत्रा-पीति । तत्रापि मुख्यतरेषु पुंस्वपि सन्निकर्षेण सान्निध्येन सम्बन्धी दायमर्हति धनार्हो भवति अनेन पूर्व्वोक्तेन विधिना धीरा मनीषिणो धनं क्रमाद्विभजेयुर्व्वण्टयेयुः ॥ ८ ॥

ननु प्राप्तपञ्चत्वस्य पुंसो विद्यमानानां पत्नीकन्यानां ताततनय-पौत्राणाञ्च मध्ये कतमस्य तद्धनग्राहकत्वमत आह मृतस्येत्यादिना । मृतस्य मानवस्य पुत्रे पौत्रे पितरि च स्थिते कन्यास्वात्मजासु च स्थितासु भार्य्यायां पत्न्यामपि स्थितायां सन्निकृष्टत्वात् पुंस्त्वेन मुख्यतर-त्वादधोभवत्वेन ज्यायस्त्वाच्च पुत्र एव दायार्हः [illegible]

बहवस्तनया यत्र सर्व्वे तत्र समांशिनः ।
ज्येष्ठे राज्याधिकारित्वं तत्तु वंशानुसारतः ॥ १० ॥
ऋणं यत् पैतृकं तच्च शोधयेत् पैतृकैर्धनैः ।
तस्मिन् स्थिते विभागार्हं न भवेत् पैतृकं वसु ॥ ११ ॥
विभज्य यदि गृह्णीयुर्विभवं पैतृकं नराः ।
तेभ्यस्तद्धनमाहृत्य पितृणां दापयेन्नृपः ॥ १२ ॥

स्त्रियः पौत्रादिर्दायार्हः पौत्रस्य पुत्रतो विप्रकृष्टत्वात् भार्याया कन्यानां च स्त्रीत्वेनाप्रधानत्वात् पितृव्योर्द्ध्वभवत्वेनाजरायस्याद्दायार्हत्व नेत्यर्थः ॥ ९ ॥

ननु बहुपुत्रस्य प्रमीतस्य पृथ्वीपतेः स्थावरं स्थावरेतरद्रव्ये च सर्वेषामात्मजानां समांशहारित्वं न्यूनाधिकांशहारित्वं वेत्यत आह बहव इत्यादिना । राज्ञो यत्र स्थावरे जङ्गमे वापि द्रव्ये बहवस्तनयाः पुत्रा भागार्हास्तत्र सर्वे समांशिनस्तुल्यभागिनः स्युर्न तु न्यूनाधिकांशिन इत्यर्थः । ननु महीपतेर्ज्येष्ठ एवात्मजे प्रायशो राज्याधिकारित्वं श्रूयते दृश्यते च तत् कथमुच्यते सर्वे तत्र समांशिन इत्यत आह ज्येष्ठे राज्ञः पुत्रे यद्राज्याधिकारित्वं तत्तु वंशानुसारतो ज्ञेयम् । वंशे यदि ज्येष्ठ एव राजपुत्रो राज्यं लभमानो भवेत्तदा तस्मिन्नेव राज्याधिकारित्वम् । अन्येषां ग्रासाच्छादनभाजनत्वम्, अन्यथा तु पृथ्व्यादिकं सकलं द्रविणं विभज्य सर्वे गृह्णीयुरिति भावः ॥ १० ॥

पैतृकमृणं दत्त्वाऽवशिष्टं पितृद्रव्यं भ्रातृभिर्विभक्तव्यमित्याह ऋणमित्यादिना । पैतृकं पितृसम्बन्धि यदृणं तत् पैतृकैः पितृसम्बन्धिभिर्धनैः शोधयेत् तस्मिन्नृणे स्थिते सति पैतृकं वसु धनं विभागार्हं वण्टनयोग्यं न भवेत् ॥ ११ ॥

पैतृकमृणमशोधयित्वैव विभज्य गृहीततातद्रव्येभ्यो नरेभ्यो राजा पितृ-ऋणं दापयेदित्याह विभज्येत्यादिना । पैतृकं विभवं धनं विभज्य

अपुत्रस्य स्थिते ताते सोदरे च पितामहे ।
जन्मतः सन्निकर्षेण पितैवास्य धनं हरेत् ॥ २० ॥
विद्यमानासु कन्यासु सन्निकृष्टास्वपि प्रिये ।
मृतस्य पौत्रो धनभाक् यतो मुख्यतरः पुमान् ॥ २१ ॥
धनं मृतेन पुत्रेण पौत्रं याति पितामहात् ।
अतोऽत्र गीयते लोकैः पुत्ररूपः स्वयं पिता ॥ २२ ॥
शौवाहिकेऽपि सम्बन्धे ब्राह्मी भार्य्या वरीयसी ।
अपुत्रस्य हरेद्रिक्थं पत्युर्देहार्द्धहारिणी ॥ २३ ॥

अथापुत्रस्य मृतस्य पुंसो वर्त्तमानानां जनकपितामहसहोदराणां मध्ये कतमस्य तद्धनहारित्वमत आह अपुत्रस्येत्यादिना । अपुत्रस्य मृतस्य जनस्य ताते पितरि सोदरे भ्रातरि पितामहे च स्थिते सति जन्मतः सन्निकर्षेण सान्निध्येन हेतुनाऽस्याऽपुत्रस्य धनं पितैव हरेद् गृह्णीयात् ॥ २० ॥

सम्प्रति पौत्रस्यापेक्षयासन्नतरास्वपि कन्यासु स्थितासु पुंसः प्रधानतरत्वात् पौत्रस्यैव धनभागित्वमित्याह विद्यमानास्वित्यादिना । हे प्रिये ! मृतस्य पुरुषस्य विद्यमानासु सन्निकृष्टास्वासन्नास्वपि कन्यासु यतः पुमान् पुरुषो मुख्यतरः प्रधानतरो भवेदतः पौत्र एव धनभाग् भवेत् ॥ २१ ॥

अधुना पितुरेव सचेतकं पुत्ररूपत्वं व्याहरन् पुत्रहीनस्य मृतस्य पुंसः पौत्रस्यैव धनाधिकारित्वमनुवदति धनमित्यादिना । यतो धनं पितामहात् सकाशात् मृतेन पुत्रेण पौत्रं याति गच्छति अतोऽत्र संसारे लोकैर्जनैः पिता स्वयं पुत्ररूप इति गीयते शब्द्यते ॥ २२ ॥

इदानीं ब्राह्मीशैवोर्भार्य्ययोर्मध्ये ब्राह्म्येवातिश्रेष्ठा पुत्ररहितस्य मृतस्य पत्युर्वित्तस्य ग्राहिका चेत्याह शौवाहिकेऽपीत्यादिना । शौवाहिकेऽपि विवाहनिमित्तकेऽपि सम्बन्धे ब्राह्मी वेदोक्तविधिना परिणीता भार्य्या शैवभार्य्यातो वरीयस्यतिवरा भवेत् पत्युः स्वामिनो

एवं स्थितायां कन्यायामकृत्वं पुत्रवधूगतम् ।
तन्मृतौ स्वामिनं प्राप्य श्वशुरात्तत्सुतामियात् ॥ २१ ॥
तथा पितामहे सत्त्वे वित्तं मातृगतं शिवे ।
तस्यां मृतायां पुत्रेण भर्त्रा श्वशुरमाव्रजेत् ॥ २२ ॥
मृतस्योर्ध्वगतं वित्तं यथा प्राप्नोति तत्पिता ।
जनन्यपि तथाप्नोति पतिहीना भवेद्यदि ॥ २३ ॥
अतः सत्यां जनन्यां तु विमाता न धनं हरेत् ।
मृते जनन्यास्तत् प्राप्य पिता गच्छेद्विमातरम् ॥ २४ ॥

स्वहीनपतिद्रव्याया नार्य्या मृतौ सत्यां तत् द्रव्यं भर्त्तृगतं ततः श्वशुरगतं च सत् श्वशुरकन्यां यायादित्याह एवमित्यादिना । एवक्रमेण प्रकारेण कन्यायां स्थितायां सत्यां पुत्रवधूगतमकृत्वं धनं तन्मृते पुत्रवधूमरणे सति स्वामिनं तद्भर्त्तारं प्राप्य ततश्च श्वशुरं प्राप्य श्वशुरात् तत्सुतां श्वशुरतनयामियाद्गच्छेत् । तन्मृते इत्यत्र नपुंसके भावे क्त इति सूत्रेण भावे क्त प्रत्ययः । एतच्च भर्त्तृदुहित्रादिश्वशुरपर्य्यन्ता-भावे बोद्धव्यम् ॥ २१ ॥

ननु प्राप्तपुत्रवित्ताया मातुर्मरणे सति कस्य तद्वित्तभागित्वमित आह तथेत्यादिना । हे शिवे ! तथा तेनैव प्रकारेण पितामहे सत्त्वे वर्त्तमाने मातृगतं जननीप्राप्तं वित्तं धनं तस्यां मातरि मृतायां सत्यां पुत्रेणात्मजेन भर्त्रा पत्या च श्वशुरगं भवेत् श्वशुरं गच्छेदित्यर्थः । यथैव सत्त्वमिति सार्वविभक्तिकस्तसिः इदं पुत्रस्य सोदराणां तत्पुत्राणाञ्चा-सत्त्वे बोध्यम् ॥ २२ ॥

पुत्रादिपितृपर्य्यन्तरहितस्य प्राप्तधनस्य पुंसो जनकस्य जनन्या अपि दत्त्रिमद्रव्यत्वं तन्मृतौ च तस्य विमातृपर्य्यन्तगामित्वमाह मृतस्येत्यादि-द्वयेन । मृतस्य जनन्योर्ध्वगतमूर्द्ध्वं प्राप्तं वित्तं तत्पिता मृतस्य जनको यथाप्नोति जननी तथैव यदि पतिहीना स्वामिरहिता भवेत् तदा तज्जनन्यप्याप्नोति ॥ २२ ॥

मृतस्य सोदरो भ्राता वैमात्रेयस्तथा प्रिये ।
धनं पितृगतत्वेन विभजेतां समांशिनौ ॥ ३९ ॥
कन्यायां जीवितायाञ्च तदपत्यं न दायभाक् ।
यत्र यद्वाधितं वित्तं तस्मात्तावत्परं व्रजेत् ॥ ४० ॥
विभजेयुर्दुहितरः पुत्राभावे पितुर्धनम् ।
उद्वाहयन्त्योऽनूढास्तु पितुः साधारणैर्धनैः ॥ ४१ ॥

ननु सोदरायां वैमात्रेयसन्ततौ च विद्यमानायां वैमात्रेयमरणे सति तद्गतं वित्तं का प्राप्नुयादित्यत आह जीवितायामित्यादिना । सोदरायां भगिन्यां विमातुः पुत्रसन्ततौ च स्थितायां सत्यां वैमात्रेयगतं वित्तं तन्मरणे सति वैमात्रेयाश्रयो विमातृजसन्ततिर्भजेत् सेवेत् ॥ ३८ ॥

पुत्रादिसन्तानपर्यन्तरहितस्य प्रमीतस्य पुंसः सोदरवैमात्रेययोरुभयोरपि तद्धने समभागित्वमित्याह मृतस्येत्यादिना । हे प्रिये ! मृतस्य जनस्य सोदरो भ्राता तथा वैमात्रेयश्चोभौ तद्धनस्य पितृगतत्वेन हेतुना तत्र समांशिनौ सन्तौ तद्धनं विभजेतां विभज्य गृह्णीयातामित्यर्थः ॥ ३९ ॥

जीवन्त्यां कन्यायां तदपत्यस्य दायभागित्वं नेत्याह कन्याया-मित्यादिना । कन्यायां जीवितायां सत्यां तदपत्यं दायभाङ्न भवेत्, किन्तु कन्यैव दायभागिनी स्यादित्यर्थः । यत्र जने यद्वित्तं धनं बाधितं भवेत् तस्मात् तस्य बाधकजनस्य मरणे सति तद्वित्तं तत्पर जनं व्रजेत् ॥ ४० ॥

अपरिणीतां भगिनीं साधारणधनादुद्वाहयन्त्यो दुहितरो मृतस्याऽपुत्रस्य पितुर्वित्तं सर्वां विभज्य गृह्णीयुरित्याह विभजेयु-रित्यादिना । पितुः पुत्राभावे सति पितुः साधारणैः धनैरनूढामपरिणीतां पितुः पुत्रीमुद्वाहयन्त्यो दुहितरः पितुर्धनं तु द्रव्यं विभजन्तु । तदवशेषं पितामहमातापि [illegible] विभजेत् ॥ ४१ ॥

पितृव्यात् सन्निकर्षेऽपि तुल्यौ भ्रातृपितामहौ ।
धनं पितृपदं गत्वा प्रयातुर्भ्रातरं भजेत् ॥ ४६ ॥
स्थितेऽप्यपत्ये दुहितुः प्रेतस्य पितरि स्थिते ।
दुहित्रपत्यं धनभाग् धनं यस्मादधोमुखम् ॥ ४७ ॥
स्वःप्रयातुः स्थिते ताते तथा मातरि कालिके ।
पुंसो मुख्यतरत्वेन धनहारी भवेत् पिता ॥ ४८ ॥
स्थितः स्वपितृमापिण्डो वर्त्तमानेऽपि मातुले ।
प्रेतस्य धनहारी स्यात् पितुः सम्बन्धगौरवात् ॥ ४८

जीवति सति अधोभवानां जनानां मुख्यत्वात् प्रधानत्वाद्धेतोर्भ्रातैव धनभाग् भवेत् मृतात् पुत्रात् पितृगतं धनं मृतस्य भ्रातैव भजेदित्यर्थः ॥ ४५ ॥

पितृव्यादिति । अत्र लोके पितृव्यात् सन्निकर्षे सामीप्ये यद्यपि भ्रातृपितामहौ तुल्यौ समानौ भवतस्तथाप्यधोभवानां मुख्यत्वात् स्वः प्रयातुर्जनस्य धनं पितृपदं गत्वा भ्रातरं भजेत् ॥ ४६ ॥

ननु पुत्रादिपुत्रीपर्य्यन्तहीनस्य मृतस्य पुंसो विद्यमानयोस्तात दुहित्रपत्ययोर्मध्ये कतरस्य तद्धनग्राहकत्वमत आह स्थित इत्यादिना । प्रेतस्य मृतस्य जनस्य पितरि स्थिते दुहितुरपत्येऽपि स्थिते सति यस्माद्धनमधोमुखं स्यात्ततो दुहित्रपत्यमेव धनभाग् भवेत् ॥ ४७ ॥

प्रेतस्य पुंसो जीवतोर्मातापित्रोर्मध्ये पुरुषस्य प्रधानत्वात् पितुरेव तद्धनहारित्वमित्याह स्वः प्रयातुरित्यादिना । हे कालिके ! स्वः प्रयातुर्मृतस्य जनस्य ताते पितरि स्थिते सति तथा मातरि स्थितायां सत्यां पुंसो मुख्यतरत्वेन हेतुना पिता धनहारी भवेत् ॥ ४८ ॥

ननु मृतस्य पुंसो विद्यमानयोर्मातुलपितृसपिण्डयोर्मध्ये कतरस्य तद्धनभागित्वमत आह स्थित इत्यादिना । [illegible] नेऽपि पितुः सम्बन्धस्य गौरवाद्धेतोः स्थितः स्वपितृसापिण्डः प्रेत[illegible]

अपुत्रस्याप्यसन्तानाद् धनमूर्द्ध्वभवं गतम् ।
तत्रापि पुंसां पुंस्त्वादितं पितृकुलं शिवे ! ।
अतोऽस्य सन्निकृष्टोऽपि मातुलो नाप्नुयाद्धनम् ॥ ५० ॥
अजीवत्पितृकः पौत्रः पितृव्यैः सह पार्वति ! ।
पितामहस्य द्रविणात् स्वपितुर्द्दायमर्हति ॥ ५१ ॥
भ्रातृहीना तथा पौत्री पितृव्यैः समभागिनी ।
पितामहधनं सौम्या हरेच्च मृतमातृका ॥ ५२ ॥
सत्सु पौत्राः पितामह्यां पौत्राः पितृष्वसर्य्यपि ।
वित्ते पितृगते देवि ! पौत्री तत्राधिकारिणी ॥ ५३ ॥

धनहारी स्यात् सपिण्ड एव सापिण्ड्यः पुत्रादिभ्य इति स्वा-र्थेऽण् ॥ ४९ ॥

ननु पितुः सपिण्डत्वात् सन्निकृष्टस्य मातुलस्यैव प्रेतधनहर्तृत्वं सम्भवति न तु विप्रकृष्टस्य पितुः सपिण्डस्येत्याशङ्कां परिहरन्नाह अपुत्रस्येत्यादिना सार्द्धम् । हे शिवे ! अपुत्रात्मजाभावे सति प्रेतस्य धनमूर्द्ध्वभवं अनं गतं प्राप्तं भवेत् तत्राप्यूर्द्ध्वभवेऽपि पुंसां पुरुषत्वात् पितृकुलमितं प्राप्तं स्यात् अतो हेतोरस्य लोके सन्निकृष्टो-ऽप्यासन्नोऽपि मातुलः प्रेतस्य धनं नाप्नुयात् न लभेत् ॥ ५० ॥

भ्रातृभ्योऽविभक्तस्य पुरुषस्य मृतौ सत्यां तत्पुत्रः पितृव्यैः सार्द्धं पैतामहद्रव्यात् पैतृकमंशं प्राप्नुयादित्याह अजीवदित्यादिना । हे पार्वति ! अजीवत्पितृको मृतजनकः पौत्रः पितृव्यैः पितुर्भ्रातृभिः सह पितामहस्य द्रविणात् द्रव्यात् स्वपितुर्द्दायं प्राप्तुमर्हति ॥५१॥

अजीवन्मातृका भ्रातृरहिता पौत्र्यपि पितामहात् द्रव्यात् प्रमी-तस्य पितुरंशं प्राप्तुमर्हतीत्याह भ्रातृहीनेत्यादिना । चेद्यदि मृतमा-तृका भ्रातृहीना सोदरवैमात्रेयरहिता सौम्या व्यभिचारादिदोषहीना च भवेत् तदा तथा तेन प्रकारेण पौत्री पुत्रदुहिता पितृव्यैः सम-भागिनी सती पितामहधनं हरेत् गृह्णीयात् ॥ ५२ ॥

अतः सत्कुलजां कन्यां शैवैरुद्वाहयन् पिता ।
क्रोधाद्वा लोभतो वापि स भवेल्लोकगर्हितः ॥ ६१ ॥
शैवी तदन्वयाभावे सोदको ब्रह्मदो नृपः ।
हरेयुः क्रमतो वित्तं मृतस्य शिवशासनात् ॥ ६२ ॥
पिण्डदात् सप्तपुरुषाः सपिण्डाः कथिताः प्रिये ।
सोदका दशमान्ताः स्युस्ततः केवलगोत्रजाः ॥ ६३ ॥

शैव्याः स्त्रियाः पित्रादीनां धनेऽधिकारो नास्त्यतः शैवोद्वाहं प्रकुर्वन्तीं तां चेद्यदि सौम्यामव्यभिचारिणीं जानीयात्तदा शैवभर्त्तैव पालयेत् रक्षेत् । जानीयादिति त्वध्याहारलभ्यम् । प्रकुर्वन्तीमित्यत्र नुमागमः त्वार्षः ॥ ६० ॥

अथ शैवेन विधिना सत्कुलजां कन्यामुद्वाहयतो जनकस्य लोकनिन्द्यत्वं दर्शयितुमाह अत इत्यादिना । अतो ब्राह्मजनके मातापित्रोः सपिण्डे वा स्थिते भर्त्तुर्द्रव्ये स्वपित्रादिद्रव्ये चाधिकारस्याभावाद्धेतोः क्रोधाद्वा लोभतो वापि शैवैर्विधिभिः सत्कुलजां स्वसञ्जातां कन्यामुद्वाहयन् यः स पिता लोकगर्हितो लोकनिन्दितो भवेत् ॥ ६१ ॥

पुत्त्रादिशैवीसन्ततिपर्य्यन्तरहितस्य प्राप्तपञ्चत्वस्य पुरुषस्य स्थावरादिसकलद्रव्ये तु सोदकस्य वेदाध्यापकगुरोर्नरपतेश्च क्रमतोऽधिकारित्वमुक्त्वाह शैवीत्यादिना । शैवी तदन्वयाभावे सति सोदको ब्रह्मदो वेदाध्यापकः गुरुः नृपो राजा च मृतस्य वित्तं धनं शिवशासनात् शिवाज्ञातः क्रमतो हरेयुः यथा शैवी तदन्वयाऽसत्त्वे प्रथमतः सोदको मृतस्य वित्तं हरेत्, तदभावे वेदाध्यापकः तदसत्त्वे तु राजा चेति ॥ ६२ ॥

ननु केषां सपिण्डत्वं केषां सोदकत्वं केवलगोत्रजत्वं च केषा-मत आह पिण्डादित्यादिना । हे प्रिये ! पिण्डदात् पिण्डदातारं पुरुषमारभ्य सप्तपुरुषाः सपिण्डाः कथिताः तत ऊर्द्ध्वं दशमान्ताः

विभक्तं द्रविणं यत्र संसृष्टं स्वेच्छया तु चेत् ।
अविभक्तविधानेन भजेरंस्तद्धनं पुनः ॥ ६४ ॥
अविभक्ते विभक्ते वा यस्य यादृग्विभागिता ।
मृतेऽपि तस्य दायादास्तादृग्विभवभागिनः ॥ ६५ ॥
ये यस्य धनहर्त्तारो भवेयुर्जीवनावधि ।
दद्युः पिण्डं तएवास्य शैवभार्य्यासुतं विना ॥ ६६ ॥
लोकेऽस्मिन् जन्मसम्बन्धाद् यथाशौचं विधीयते ।
धनभागित्वसम्बन्धात् त्रिरात्रं विहितं तथा ॥ ६७ ॥

दशमपुरुषान्ताः सोदकाः स्युः ततः परं केवलगोत्रजा भवेयुः । पिण्डदादिति ल्यब्लोपे कर्मणीति कर्मणि पञ्चमी ॥ ६३ ॥

विभक्तस्य पश्चात् स्वेच्छया संसृष्टस्य द्रव्यस्याविभक्तविधानेनैव पुनर्विभागमाह विभक्तमित्यादिना । चेद्यदि विभक्तं यत् द्रविणं द्रव्यं स्वेच्छया संसृष्टं मिश्रीकृतं स्यात्तदा तद्धनं पुनरविभक्तविधानेन दायादा भजेरन् । ६४ ॥

जीवतो यस्य पुरुषस्य विभक्ताऽविभक्ताखिलद्रव्येषु येषां यादृग्विभागित्वं तस्य मरणेऽपि तत्र तेषां तादृग्विभागित्वं स्यादेवेत्याह अविभक्ते इत्यादिना । यस्य पुरुषस्याविभक्ते विभक्ते वा द्रव्ये येषां दायादानां यादृग्विभागिता स्यात्तस्य पुंसो मृतेऽपि मरणेऽपि ते दायादास्तादृग्विभवभागिनो भवेयुः ॥ ६५ ॥

प्रमीतस्य यस्य पुंसो द्रविणं ये लभेरंस्तएव यावज्जीवनं तस्मै पिण्डं दद्युरित्याह ये इत्यादिना । ये पुमांसो यस्य पुंसो धनहर्त्तारो भवेयुस्तएव जीवनावधि जीवनपर्य्यन्तमस्य पुरुषस्य पिण्डं दद्युः परन्तु शैवभार्य्यासुतं विना तस्य तत्पिण्डदानेऽधिकारो नास्तीत्यर्थः । शैवभार्य्यासुतमिति शैव्यास्तद्दुहित्रादीनां चोपलक्षणम् ॥ ६६ ॥

यथा जन्मसम्बन्धात् सर्वेषां बान्धवानां मरणजनननिमित्तकम-

पूर्णेऽशौचेऽथवाऽपूर्णे तत्कालाभ्यन्तरे श्रुते।
श्रवणाच्छेषदिवसैर्विशुद्धेयुर्द्विजातयः ॥ ६८ ॥
कालातीते तु विज्ञाते खण्डेऽशौचं न विद्यते।
पूर्णे त्रिरात्रं विहितं न चेत् संवत्सरात् परम् ॥ ६९ ॥
वर्षातीतेऽपि चेन्मातुः पितुर्वा मरणं श्रुतम्।
त्रिरात्रमशुचिः पुत्रस्तथा भर्त्तुः पतिव्रता ॥ ७० ॥

शौचं जायते एवं धनभागित्वसम्बन्धाज्ज्ञातिमात्रस्यापि त्रिरात्रमशौचं स्यादित्याह लोके इत्यादिना। जन्मसम्बन्धमात्रस्यापि लोके जने मरणजननिमित्तकमशौचं विधीयते तथा धनभागित्वसम्बन्धाज्ज्ञातिमात्रस्यापि त्रिरात्रमशौचं विहितम्। लोकः स्याद्भुवने जने इत्यमरः ॥ ६७ ॥

सम्पूर्णाशौचकालाभ्यन्तर एव पूर्णं खण्डं वाऽशौचं श्रुतवतामपर-देशस्थानां ब्राह्मणादीनामशौचश्रवणावसरादवशिष्टैरेवाशौचवासरै-र्विशुद्धिः स्यात्तदासरमारभ्यापरैर्वा दशाहादिभिरित्याशङ्कायामाह पूर्णे इत्यादिना। पूर्णेऽशौचेऽथवाऽपूर्णे खण्डेऽशौचे तत्कालाभ्यन्त-रेऽशौचकालमध्ये श्रुते सति श्रवणादशौचश्रवणदिवसाच्छेषदिवसै-रवशिष्टैरहोरात्रैर्द्विजादयो ब्राह्मणादयो विशुध्येयुः श्रूयतेऽस्मिन्निति श्रवणं तस्मात्। करणाधिकरणयोश्चेत्यधिकरणे ल्युट् ॥ ६८ ॥

सम्पूर्णाशौचकालव्यपगमे सति संवत्सराभ्यन्तर एव ज्ञातिमरणं शृण्वन्तो ब्राह्मणादयः कियद्भिरहोरात्रैर्विशुध्येयुरत आह काला-तीते इत्यादिना। कालातीते त्वशौचकालातिक्रमणे तु खण्डेऽशौचे विज्ञाते सत्यशौचं न विद्यते चेद्यदि संवत्सरात्पूर्णात् परमूर्द्ध्वं [illegible]-मतीतं न भवेत्तदा अतीतेऽप्यशौचकाले पूर्णेऽशौचे विज्ञाते सति त्रिरात्र-मशौचं विहितम्। कालस्यातीतं कालातीतमिति षष्ठीति [illegible] षष्ठीतत्पुरुषः। अतीतमित्यतिपूर्वादिणो भावे क्तः। [illegible] स्यात् व्यतीतेषु दिनेष्वपीति देवलवचनात् [illegible] वचनम् ॥६९॥

[illegible]न्तरे [illegible]शौचान्तरमापतेत् ।
[illegible]शौचेन [illegible]णां शुद्धिस्तत्र विधीयते ॥ ७१ ॥
[illegible]शौचानां गुरुत्वञ्च कालव्यापित्वगौरवात् ।
[illegible]मध्ये गरीयो व्यापकं स्मृतम् ॥ ७२ ॥
यद्यशौचान्तर्दिवसे पतेदपरसूतकम् ।
पूर्वाशौचेन शुद्धिः स्याद[illegible] दिनद्वयम् ॥ ७३ ॥

संवत्सरे व्यतीतेऽपि मातापित्रोर्मरणं श्रुत्वतः पुत्रस्य स्वामिनो मरणं श्रुत्वत्याः पतिव्रतायाश्च त्रिरात्रमशौचं स्यादित्याह वर्षातीतेऽपीत्यादिना । वर्षातीतेऽपि संवत्सरातिक्रमेऽपि चेद्यदि मातुः पित्रोर्वा मरणश्रुतिः स्यात्तदा तयोर्मरणश्रुतौ सत्यां पुत्रः त्रिरात्रमशुचिः स्यात् तथा भर्तुः स्वामिनो मरणश्रुतौ पतिव्रता स्त्री त्रिरात्रमशुचिः स्यात् ॥ ७० ॥

[illegible]शौचे सति तन्मध्यपातिसमानप्राबल्य[illegible]कालव्यापकाशौचान्तरनिपाते [illegible]दिनव्यापकेनाशौचेन सर्वेषां शुद्धिः स्यादित्याह अशौचाभ्यन्तर इत्यादिना । यस्मिन्नशौचे स अशौचाभ्यन्तरेऽशौचमध्ये [illegible]शौचान्तरं [illegible]कालव्यापकमपरमशौचमापतेदागच्छेत् [illegible]शौचे जाते सति गुर्वशौचेनाधिकदिनव्यापकेनाशौचेनापगतेन सर्वेषां शुद्धिर्विधीयते ॥ ७१ ॥

[illegible]शौचानां गुरुत्वं निरूपयति अशौचानामित्यादिना । कालव्यापित्वगौरवात् कालव्यापकत्वे गुरुत्वात्तेषामशौचानां गुरुत्वं भवेत्, [illegible]व्यापकत्वादशौचानां गुरुत्वमल्पकालव्यापकत्वाच्च लघुत्वमित्यर्थः । [illegible]व्यापकयोरशौचयोर्मध्ये व्यापकमशौचं गरीयो गुरुतरं [illegible] ॥ ७२ ॥

[illegible]शौचान्तर्दिने[illegible]शौचे सति ते पूर्वाशौचेनैव शुद्धिः स्यात् [illegible]शौचेन [illegible] यदीत्यादिना । अशौचान्तर्दिवसे

स्वगोत्रनामाभ्युदयिकं कुर्यात् स्वजनैः सह ॥ ७६॥
औरसेऽपि यथा पित्रोर्धने पिण्डेऽधिकारिता ।
आदातृदात्रोस्तद्यतोऽस्य पितरौ हि तौ ॥ ७७॥
आपञ्चाब्दं शिशुं गृह्णन् सवर्णात् परिपालयेत् ।
पञ्चवर्षाधिको बालो दत्तको न प्रशस्यते ॥ ७८ ॥
आत्मपुत्रोऽपि दत्तश्चेद् गृहीतैव भवेत् पिता ।
उत्पादकः पितृव्यः स्यात् सर्वकर्मसु कालिके ! ॥ ७९॥

इदानीं मातापित्रोः सम्मत्या पुत्रमादाय गृहीत्वा स्वगोत्रनामा-भ्युदयिकं तत्संस्कारादि विधेय इत्याह सुतमित्यादिना । जनन्या जन-यित्र्या जनकस्योत्पादकस्य च सम्मत्या सुतं तत्पुत्रमादाय गृहीत्वा स्वगोत्रनामाभ्युदयिकं स्वगोत्रनामकमाभ्युदयिकं गृहीता स्वजनैर्बा-न्धवैः सह कुर्यात् ॥ ७६ ॥

आदातृदात्रोर्मातापित्रोर्धने पिण्डे च दत्तकपुत्रस्य दृष्टान्तमधि-कारित्वमाह औरसेऽपीत्यादिना । अपिशब्दः पिण्डेन योजनीयः । पित्रोर्धने पिण्डेऽपि यथौरसे पुत्रेऽधिकारिता वर्त्तते तद्वदादातृदात्रोरपि धने पिण्डे च दत्तकेऽधिकारिता स्यात् । दत्तकस्यादातृदात्रोः पिण्डादा-वधिकारे हेतुं दर्शयन्नाह यत इत्यादिना । यतोऽस्य दत्तकस्य तावा-दातृदातारौ हीति निश्चितौ पितरौ स्यातामतस्तद्धनपिण्डयोस्तस्याधिका-रितेत्यर्थः ॥ ७७ ॥

ननु कियद्वयस्को बालो दत्तकः प्रशस्तोऽत आह आपञ्चाब्दमि-त्यादिना । सवर्णात् समानवर्णादापञ्चाब्दं पञ्चाब्दपर्य्यन्तं शिशुं बालं गृह्णन् लालनादिः परिपालयेच्चेत् पञ्चाब्दा वर्षाणि यस्य सपञ्चा-ब्दस्तस्मात् तस्मापञ्चाब्दम् । आङ्मर्यादाभिविध्योरित्यव्ययीभावः । पञ्चवर्षाधिको यो बालोऽसौ दत्तको न प्रशस्यते ॥ ७८ ॥

दत्तश्चेदात्मपुत्रोऽप्यादाता तत्पितृव्य एव पिता स्यात्तज्जन-कश्च तत्पितृव्यः स्यादित्याह आत्मपुत्रोऽपीत्यादिना । हे कालिके !

यो यस्य धनहर्त्ता स्यात् स तद्धर्मानपि पालयेत् ।
संरक्षेन्नियमान् तस्य तद्बन्धून् परितोषयेत् ॥ ८० ॥
कानीना गोलकाः कुण्डाः पतिपातकिनश्च ये ।
नाशौचं मरणे तेषां नैव दायाधिकारिता ॥ ८१ ॥
लिङ्गच्छेदो दमो येषां यासां नासाविकर्त्तनम् ।
महापातकिनाञ्चापि मृतौ नाशौचमाचरेत् ॥ ८२ ॥
नृणामुद्देशहीनानां परिवारान् धनान्यपि ।
पालयेद्रक्षयेद्राजा यावद्द्वादशवत्सरम् ॥ ८३ ॥

चेद्यदि भ्रातृपुत्रोऽपि दत्तो भवेत्तदा सर्वेषु कर्मसु पालक एव तस्य पिता भवेत् उत्पादको जनकस्तु तस्य पितृव्यः स्यात् ॥ ७९ ॥

धनहारिणा पुरुषेण धनस्वामिनो धर्मा नियमाश्च संरक्षणीयास्तद्बान्धवाश्च सन्तोषणीया इत्याह य इत्यादिना । यः पुमान् यस्य पुंसो धनहर्त्ता स्यात् स तस्य धर्मानपि पालयेत् तस्य नियमांश्च संरक्षेत् तस्य बन्धूनपि परितोषयेत् ॥ ८० ॥

कानीनगोलकादीनां दायाधिकारित्वं तेषां मरणेऽशौचं च नेत्याह कानीना इत्यादिना । ये कानीनाः पितृवेश्मन्यप्रकाशं कन्ययोत्पादिताः ये च गोलका मृते भर्त्तरि जाराज्जाताः ये च कुण्डा जीवत्येव पत्यौ जारजाः ये चोक्तलक्षणा अतिपातकिनस्तेषां मरणेऽशौचं न स्यात् तेषां दायाधिकारिता च नैव स्यात् । अमृते जारजः कुण्डो मृते भर्त्तरि गोलकः इत्यमरः ॥ ८१ ॥

नासाकर्त्तनदण्डकापराधकर्त्रीणां स्त्रीणां लिङ्गच्छेदनदण्डकापराधकारिणां महापातकिनाञ्च पुंसामपि मृतावशौचं नाचरणीयमित्याह लिङ्गच्छेदन इत्यादिना । येषां पुरुषाणां लिङ्गच्छेदः शिश्नकर्त्तनं दमो दण्डो विहितस्तेषां यासां नासाविकर्त्तनं नासिकाकर्त्तनं दण्डस्तासां स्त्रीणां महापातकिनां ब्रह्मघातकादीनाञ्चापि मृतौ मरणेऽशौचं नाचरेन्न कुर्य्यात् ॥ ८२ ॥

द्वादशाब्दे गते तेषां दर्भदेहान् विदाहयेत् ।
त्रिरात्रान्ते तत्सुताद्यैः प्रेतत्वं परिमोचयेत् ॥ ८४ ॥
ततस्तत् परिवारेभ्यः पुत्रादिक्रमतो धनम् ।
विभज्य नृपतिर्दद्यादन्यथा पातकी भवेत् ॥ ८५ ॥
न कोऽपि रक्षिता यस्य दीनस्यापन्नतस्य च ।
तस्यैव नृपतिः पाता यतो भूपः प्रजाप्रभुः ॥ ८६ ॥
यथागमेऽप्यनुद्दिष्टो विभागास्तेऽपि कालिके ! ।

अनुद्दिष्टानां मनुष्याणां परिवारान् धनानि च द्वादशवर्षपर्य्यन्तं राज्ञा रक्षितव्यानीत्याह नृपाणामित्यादिना । उद्देशहीनानामनुद्दिष्टानां नृणां मनुष्याणां परिवारान् यावद् द्वादशवत्सरं द्वादशवर्षपर्य्यन्तं राजा पालयेत्, तेषां धनान्यपि स एव रक्षयेत् ॥ ८३ ॥

द्वादशवर्षादूर्द्ध्वमनुद्दिष्टानां पुंसां कुशमयानि शरीराणि राज्ञा तत्पुत्रादिभिर्दाहयितव्यानि त्रिरात्रान्ते तेषां प्रेतत्वञ्च मोचयितव्यमित्याह द्वादशाब्द इत्यादिना । द्वादशाब्दे द्वादशवर्षे गते याते सति अनुद्देशहीनानां नृणां दर्भदेहान् कुशशरीराणि राजा तत्सुताद्यैरनुद्दिष्टानां पुत्रादिभिर्विदाहयेत्, त्रिरात्रान्ते तेषां प्रेतत्वञ्च तैरेव परिमोचयेत् ॥ ८४ ॥

ततः परमुद्देशरहितजनस्वामिकं द्रव्यं विभज्य पुत्रादिक्रमतस्तत्परिवारेभ्यो नृपतिर्दद्यात् । नन्वेवमकुर्वतो नरपतेः को दोषो-त आह अन्यथेति । अन्यथा एतदकुर्वन्नृपतिः पातकी भवेत् ॥ ८५ ॥

विपत्तिं प्राप्तोऽनन्यरक्षको मर्त्यो राज्ञैव पालनीय इत्याह न कोऽपीत्यादिना । आपन्नतस्य विपत्तिं प्राप्तस्य दीनस्य दरिद्रस्य यस्य कः कोऽपि रक्षिता न विद्यते तस्य नृपतिरेव पाता रक्षकः स्यात्, यतो भूप एव प्रजानां प्रभुः स्वामी भवेत् । निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि च इत्यमरः ॥ ८६ ॥

स्वार्जितं स्थावरधनमस्थावरधनञ्च यत् ।
अस्थावरं पैतृकञ्च दातुं सर्वं क्षमो भवेत् ॥ ८१ ॥
धनमेवं विधानेन दत्तं वा धर्म्मसात्कृतम् ।
पुंसा तदन्यथा कर्त्तुं पुत्राद्यैर्नैव शक्यते ॥ ८२ ॥
धर्म्मार्थं स्थापितं रिक्थं दाता रक्षितुमर्हसि ।
न प्रभुः पुनरादातुं धर्म्मो ह्यस्य यतः प्रभुः ॥ ८३ ॥
मूलं वा तदुपस्वत्वं यथासङ्कल्पमम्बिके ! ।
स्वयं वा तत्प्रतिनिधिर्धर्म्मार्थं विनियोजयेत् ॥ ८४ ॥

सति पत्न्यां भार्य्यायामथवा कन्यायां दुहितरि स्थितायां तत्सुते कन्यापुत्रे वा जनके पितरि वा स्थिते जनन्यां मातरि स्थितायामेव भ्रातरि सोदरे स्थिते स्वसर्य्यपि भगिन्यामपि स्थितायां स्वार्जितमात्मोपार्जितं यत् स्थावरं धनं यच्चास्थावरधनं जङ्गम-द्रव्यं यच्च पैतृकमप्यस्थावरं धनं तत् सर्वं दातुं पुमान् क्षमः समर्थो भवेत् ॥ ८० । ८१ ॥

शङ्करोक्तेन विधानेन पुरुषेण दत्तं धर्मार्थं स्थापितं च द्रव्यं तत् पुत्रादिभिर्नान्यथा कर्त्तुं शक्यमित्याह धनमित्यादिना । पुंसा पुरुषेणैवं विधानेन शिवोक्तेनैतादृशेन विधिना यत् धनं दत्तं यद्वा धर्मसात् कृतं धर्माधीनं कृतं धर्मार्थं स्थापितमिति यावत् तत् धनं पुत्राद्यैरन्यथा कर्त्तुं नैव शक्यते ॥ ८२ ॥

धर्मार्थस्थापितद्रव्यस्य धर्मस्वामिकत्वाद्दातुः पुनरग्राह्यत्वं तद्रक्षकत्वञ्चाह धर्मार्थमित्यादिना । धर्मार्थं स्थापितं यद्रिक्थं धनं तद्रक्षितुं दाताऽर्हति तत् धनं पुनरादातुं ग्रहीतुं दाता न प्रभुरधिपः यतोऽस्य धनस्य हीति निश्चितो धर्मः प्रभुः स्वामी ॥ ८३ ॥

मूलधनं तदुपस्वत्वं वात्मनात्मप्रतिनिधिना वा यथासङ्कल्पं धर्मार्थं विनियोजयितव्यमित्याह मूलमित्यादिना । हे अम्बिके ! यथासङ्कल्पं सङ्कल्पमनतिक्रम्य मूलं वा धनं तदुपस्वत्वं वा तत्प्रति

स्वोपार्ज्जितधनस्यार्द्धं दायादायापि चेत् धनी ।
दद्यात् स्नेहेन तस्यान्यो नान्यथा कर्त्तुमर्हति ॥ ८५ ॥
यदि स्वोपार्ज्जितस्यार्द्धमेकस्मै धनदायिनाम् ।
ददात्यन्येन दायादैः प्रतिरोद्धुं न शक्यते ॥ ८६ ॥
एकेन पितृवित्तेन यत्र वित्तमुपार्ज्जितम् ।
पित्र्ये समांशा दायादा न लाभार्हा विनार्ज्जकम् ॥ ८७
पैतृकाणि च वित्तानि नष्टान्युद्धारयेत्तु यः ।

निधिरात्मनः प्रतिनिधिर्वा धर्मार्थं विनियोजयेत् तदभावे तत्सदृशो य उपादीयते स प्रतिनिधिः ॥ ८४ ॥

ननूपार्ज्जकजनेन प्रेमतो दायहारिणेऽपि दत्तं स्वोपार्ज्जितद्रव्यस्यार्द्धमन्यः पुमानन्यथा कर्त्तुमर्हति न वेत्यत आह स्वोपार्ज्जितधनस्येत्यादिना । धनी पुमांश्चेद्यदि स्नेहेन प्रेम्णा स्वोपार्ज्जितधनस्यार्द्धं दायादायापि धनहारिणेऽपि दद्यात्तदान्यो जनस्तत्स्नेहेन स्वोपार्ज्जितधनार्द्धमन्यथा कर्त्तुं नार्हति न योग्यो भवति । इतोऽनन्तरं वक्ष्यमाणस्य वचनस्य बहुविषयत्वात् द्वयविषयकमिदं वचनम् ॥ ८५ ॥

ननु बहूनां दायादानामेकस्मै दीयमानं स्वोपार्ज्जितधनस्यार्द्धमन्ये दायादाः प्रतिरोद्धुं शक्नुवन्ति न वेत्यत आह यदीत्यादिना । यद्यर्जको धनहारिणां दायादानां मध्ये एकस्मै धनहारिणे स्वोपार्ज्जितस्य द्रव्यस्यार्द्धं ददाति तदान्यैर्दायादैः प्रतिरोद्धुं वारयितुं न शक्यते ॥ ८६ ॥

ननु पैतृकद्रविणेनोपार्जिते वित्ते सर्वे दायादा भागार्हा भवेयुर्न वेत्याशङ्कायामाह एकेनेत्यादिना । यत्र येन दायादेन बहुष्वनेकेन दायादेन येन पितृवित्तेन पैतृकेण धनेन वित्तं धनमुपार्जितं ते सर्वे दायादास्तस्मिन् पित्र्ये पैतृके वित्ते समांशाः समभागिनः स्युः तमर्जकं विना लाभार्हास्तु न स्युः किन्त्वर्जक एव लाभार्ह इत्यर्थः ॥ ८७ ॥

मातरं पितरं देवि ! गुरुं चैव पितामहान् ।
मातामहान् करेणापि प्रहरन्नैव दायभाक् ॥ १०२ ॥
निघ्नन्नन्यानपि प्राणैर्न तेषां धनमाप्नुयात् ।
हतानामन्यदायादा भवेयुर्धनभागिनः ॥ १०३ ॥
नपुंसकाः पङ्गवश्च ग्रासाच्छादनमम्बिके ! ।
यावज्जीवनमर्हन्ति न ते स्युर्दायभागिनः ॥ १०४ ॥
सस्वामिकं प्राप्तधनं पथि वा यत्र कुत्रचित् ।
नृपस्तत् स्वामिने प्राप्ता दापयेत् सुविचारयन् ॥ १०५ ॥

पृथगन्नादिनाऽपृथगन्नादिना वा पुंसा यत् धनमर्ज्जितं तदेव धनं स्वोपार्जितं स्यात् । सोऽर्जक एव तत्स्वामी स्वोपार्ज्जितस्य धनस्य प्रभुर्न चापरोऽर्ज्जकभिन्नः स्वामी ॥ १०१ ॥

मात्रादीन् पाणिनापि प्रहरतो मानवस्य दायभागित्वं नैव स्यादित्याह मातरमित्यादिना । हे देवि ! मातरं जननीं पितरं जनकं गुरुं मन्त्रोपदेष्टारं बहुवचनस्य बहुप्रकाशकत्वात् पितामहान् पितामहादीन् मातामहांश्चापि मातामहादीनपि करेण पाणिनापि प्रहरन्नरो दायभाङ्नैव भवेत् । अपि शब्देन दण्डादिना मात्रादीन् प्रहरतस्तु सुतरामेव दायभागित्वं न भवेदिति सूचितम् ॥ १०२ ॥

भ्रात्रादीनपि धनार्थं मारयतः पुरुषस्य हतस्वामिकद्रव्ये निरंशकत्वमपरदायादानाञ्च समांशकत्वं स्यादित्याह निघ्नन्नित्यादिना । अन्यानपि जनान् प्राणैर्निघ्नन्मारयन्नरस्तेषां हतानां धनं नाप्नुयान्न लभेत किन्तु हतानामन्ये हन्तुर्भिन्ना दायादा धनभागिनो भवेयुः ॥ १०३ ॥

अथाऽनंशानां पङ्गुक्लीवानां यावज्जीवनं ग्रासाच्छादनभागित्वं स्यादित्याह नपुंसका इत्यादिना । हे अम्बिके ! जगज्जननि ! नपुंसकाः पङ्गवश्च यावज्जीवनं जीवनपर्यन्तं केवलं ग्रासाच्छादनमर्हन्ति ते दायभागिनो न स्युः ॥ १०४ ॥

अस्वामिकानां जीवानामस्वामिकधनस्य च ।
प्राप्ता तत्र भवेत् स्वामी दशमांशं नृपेऽर्पयेत् ॥ १०६ ॥
स्थावरं धनमन्यस्मै स्थिते सान्निध्यवर्त्तिनि ।
योग्ये क्रेतरि विक्रेतुं न शक्तः स्थावराधिपः ॥१०७ ॥
सान्निध्यवर्त्तिनां ज्ञातिः सवर्णो वा विशिष्यते ।
तयोरभावे सुहृदो विक्रेतिच्छा गरीयसी ॥ १०८ ॥

अथ पथ्यादौ पतितस्य अस्वामिकद्रव्यस्य प्राप्तजनगामित्वं स्यादात्मस्वामिगामित्वं वेत्यत आह अस्वामिकमित्यादिना । पथि मार्गे यत्र कुत्रचिद्वा स्थाने अस्वामिकं प्राप्तं धनं सुविचारयन् पश्चात् स्वामिने प्राप्तधनस्यापि पतये प्राप्ता पुंसा दापयेत् ॥ १०५ ॥

अथास्वामिकाः प्राप्ता गवाश्वादयो जीवास्तादृशानि प्राप्तानि धनानि च प्राप्तारं पुमांसं गच्छेयुर्वसुधाधिपं वेत्याशङ्कायामाह अस्वामिकानामित्यादिना । अस्वामिकानां स्वामिरहितानां जीवानां गवाश्वादीनामस्वामिकस्य धनस्य च प्राप्ता जनस्तत्र तेषु प्राप्तेषु स्वामी भवेत् तत्र च दशममंशं प्राप्ता नृपेऽर्पयेद्दद्यात् । जीवानामिति धनस्येति च कर्तृकर्मणोः कृतीति कर्मणि षष्ठी ॥ १०६ ॥

ननु स्थावरद्रव्यस्वामिना दूरस्थं योग्यसमीपस्थयोः क्रायकयोर्मध्ये कतरस्मै स्थावरं धनं विक्रेतुं शक्यते तत्राह स्थावरमित्यादिना । सान्निध्यवर्त्तिनि समीपस्थायिनि योग्ये क्रयार्हे क्रेतरि क्रायके स्थिते सत्यन्यस्मै दूरवर्त्तिने पुंसे स्थावरं धनं विक्रेतुं स्थावराधिपो जनः शक्तो न भवेत्, किन्तु सान्निध्यवर्त्तिने एव विक्रेतुं शक्नुयादित्यर्थः । सन्निधिरेव सान्निध्यम् । चतुर्वर्णादीनां स्वार्थे उपसंख्यानमिति स्वार्थे ष्यञ् ॥ १०७ ॥

अथानेकेषां सन्निधिवर्त्तिनां मध्ये कतमस्य स्थावरद्रव्यक्रयणे वैशिष्ट्यमत आह सान्निध्येत्यादिना । सान्निध्यवर्त्तिनां मध्ये ज्ञातिर्गोत्रजो विशिष्यते, सवर्णः समानवर्णो वा विशिष्यते, तयोर्ज्ञातिसवर्णयोरभावे सुहृदो मित्राणि विशिष्यन्ते । ननु बहूनां गोत्रजानां

निर्णीतमूल्येऽप्यन्येन स्थावरस्य क्रयोद्यमे ।
तन्मूल्यं चेत् समीपस्थो राति क्रेता न चापरः ॥ १०९ ॥
मूल्यं दातुमशक्तश्चेत् सम्मतो विक्रयेऽपि वा ।
सन्निधिस्थस्तदान्यस्मै गृही शक्तोऽतिविक्रये ॥ ११० ॥
क्रीतं चेत् स्थावरं देवि ! परोक्षे प्रतिवासिनः ।
श्रवणादेव तन्मूल्यं दत्वासौ प्राप्तुमर्हति ॥ १११ ॥

सवर्णानां बहूनाञ्च मध्ये कतमस्मै स्थावरं द्रव्यं तत्स्वामी विक्रीणी-तेत्यत आह विक्रेतुरिच्छेति विक्रेतुर्विक्रयकर्त्तुरिच्छा गरीयसी गुरुतरा भवेत् । अतएव तेषां मध्ये यस्मै विक्रेतुमिच्छेत्तस्मै एव विक्रीणी-तेति भावः ॥ १०८ ।

नन्वन्यनिर्णीतमूल्यं स्थावरं वित्तं तन्मूल्यं ददता समीपस्था-यिना क्रीयेत निर्णीतमूल्येनान्येन वेत्याशङ्कायामाह निर्णीतेत्या-दिना । स्थावरस्य वित्तस्य क्रयोद्यमे सत्यन्येन समीपस्थभिन्नेन पुंसा निर्णीतमूल्येऽपि मूल्ये निर्णीतेऽपि सति तन्मूल्यमन्यनिर्णीतमूल्यक-स्थावरद्रव्यमूल्यं चेद्यदि समीपस्थो जनो राति ददाति तदाऽपरः समीपस्थभिन्नो जनः क्रेता क्रायको न भवेत्, किन्तु समीपस्थ एव मूल्यं दत्त्वा क्रीणीयादित्यर्थः ॥ १०९ ॥

स्थावरधनस्य मूल्यं दातुमशक्नुवति तद्विक्रये सम्मतिं वापि कुर्वति समीपस्थायिनि जने दूरस्थाय तद्विक्रेतुं तत्स्वामी शक्नोतीत्यत आह मूल्यमित्यादिना । सन्निधिस्थः समीपस्थायी जनश्चेद्यदि स्थाव-रस्य मूल्यं दातुमशक्तो भवेत्, तस्य विक्रयेऽपि वा सम्मतः सम्मतिमान् भवेत्, तदा गृही गृहस्थोऽन्यस्मै सन्निधिस्थभिन्नाय विक्रेतुं शक्नोति शक्तो भवति ॥ ११० ॥

ननु समीपस्थायिनः परोक्ष एवान्येन क्रीतं स्थावरं वित्तं क्रेतैव प्राप्तुमर्हति तत् श्रुत्वैव तन्मूल्यं ददत् समीपस्थायी वेत्या-शङ्कायामाह क्रीतमित्यादिना । हे देवि ! चेद्यदि प्रतिवासिनः

क्रेता तत्र स्वदारामान् विनिर्माति भनक्ति वा।
मूल्यं दत्त्वापि नाप्नोति स्थावरं सन्निधिस्थितः॥ ११२॥
करहीना प्रतिहता वन्यारण्यातिदुर्गमा।
भूमिपालादिष्टोऽपि तां भूमिं सम्पन्नां कर्त्तुमर्हति॥ ११३॥
बहुप्रयाससाध्यायास्तस्या भूमेर्महीभृते।
दत्त्वा दशांशं भुञ्जीयात् भूमिस्वामी यतो नृपः॥ ११४॥

सन्निधिस्थायिनो जनस्य परोक्षे स्थावरं द्रव्यमन्येन क्रीतं भवेत् तदा श्रवणादेव तन्मूल्यमन्यक्रीतस्थावरद्रव्यं प्राप्तुं नार्हतीति सूचितम्॥ १११॥

क्रायकजनविनिर्मितमन्दिरारामं तद्भग्नमन्दिरोपवनं वा क्रीतं स्थावरधनं मूल्यं दत्त्वापि समीपस्थायी नाप्नुमर्हतीत्याह क्रेतेत्यादिना। क्रेता जनस्तत्र क्रीते स्थावरे यदि स्वदारामान् स्वहर्म्याण्युपवनानि च विनिर्माति करोति तत्र विनिर्मितानेव तान् भनक्ति नाशमर्हयति वा तदा सन्निधिस्थितो जनो मूल्यं दत्त्वापि स्थावरधनं नाप्नोति न लभते॥ ११२॥

भूमिपालेनानाज्ञापितेनापि पुंसा जलोद्भवा काननोद्भवा च करहीनाखिलाभूमिः सम्पन्ना कर्त्तव्येत्याह करहीनेत्यादिना। वन्या जलोद्भवाऽरण्या काननोद्भवा चातिदुर्गमातएवाऽप्रतिहताखिलाऽतएव करहीना राजप्राप्यभागरहिता या भूमिस्तां भूमिमनादिष्टोऽपि भूपेनानाज्ञप्तोऽपि पुरुषः सम्पन्नां सस्याढ्यां कर्त्तुमर्हति; वने जले भवा, वन्यादित्यादिभ्यो यदिति यत्। पद्मः कीलालममृतं जीवनं भुवनं वनमित्यमरः। अरण्ये भवा आरण्या अरण्याण्ण इति णः॥ ११३॥

अनेकायाससाध्यवन्यारण्यक्षितिजातवस्तुनो दशमांशं भूमिस्वामिराज्ञे समर्प्यावशिष्टं सर्वं स्वयं भोक्तव्यमित्याह बह्वित्यादिना। यतो यस्मात् राजा भूमिस्वाम्यतो बहुप्रयाससाध्याया अनेक-

